॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

## स्त्रीप्रत्ययाः

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।




YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री ‘संस्कृतव्याकरण’ में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु ‘संस्कृतसारः’ इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन ‘लघुसिद्धान्तकौमुदी’ स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

18.03.2024

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# स्त्रीप्रत्ययानाम् अध्ययनम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः







आधारग्रन्थः— लघुसिद्धान्तकौमुदी

TIME-: 09:00 p.m to 09:45 p.m

DATE-: 18.01.2024 to 31.01.2024
One day break after each class




सम्पूर्ण लघुसिद्धान्तकौमुदी के स्लाइड्स को आप इस लिंक् का उपयोग कर डाउनलोड कर सकते हैं—
https://archive.org/details/@sanskrit_sar

LIVE स्थानम्— संस्कृतशिक्षा facebook group
&
संस्कृतसारः YOUTUBE CHANNEL

टाप्-डाप्-चापस्त्रयोऽप्येते ङीप्-ङीष्-ङीन्-प्रत्ययैः सह।
ऊङ्-तिभ्यां मिलिताश्चापि सन्त्यष्टौ प्रत्ययाः स्त्रियाम्॥

प्रवाचकः—
डॉ. श्रीओम शर्मा (व्याकरणे सहायकाचार्यः)
CSU श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उ.ख.)

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# स्त्रीप्रत्ययानां विषये ध्यातव्यांशाः

संस्कृतसार
छिद्यन्ते सर्वसंशयाः

- ✓ इदं प्रकरणं सर्वेषां स्त्रीलिङ्गशब्दानां ज्ञानार्थं नास्ति, अपि तु स्त्रीत्वद्योतकाः टाब्ङीबादयः अष्टौ प्रत्ययाः स्त्रीत्वविवक्षायां कस्माद्भवन्ति इत्येवं ज्ञानार्थम्।
- ✓ अस्मिन् प्रकरणे आ-प्रत्यय ई-प्रत्ययस्य च विषयविवेको बोध्यते। अनुबन्ध-योगेन आ-प्रत्ययः 'टाप्-चाप्-डाप्'भेदेन त्रिविधः। तथैव ई-प्रत्ययोऽपि 'ङीप्-ङीष्-ङीन्'भेदेन त्रिविधः। अयं विभागः वैदिकसंस्कृते उदात्तादि स्वरज्ञानार्थं पाणिनिना कृतः।
- ✓ अत्र ह्रस्व-अकारान्तपुंलिङ्गशब्दाः प्रायः स्त्रियाम् आदन्ताः ईदन्ताः वा सम्पद्यन्ते।
- ✓ इह स्वभावाद् अदन्ताः नित्यस्त्रीलिङ्गा गङ्गा, खट्वादयः शब्दा अपि स्त्रीप्रत्ययार्थम् उच्यन्ते।
- ✓ देश्यभाषासु यादृशीलिङ्गव्यवस्था तादृशी संस्कृतभाषायां नास्ति, अत्र तु शिला,नगरी इत्यादयो जडशब्दा अपि स्त्रीलिङ्गे सन्ति।

स्तन-केशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम्॥
इति लौकिकं लिङ्गबोधकं लक्षणं संस्कृतभाषायां नैवोपयुज्यते।

- ✓ संस्कृतभाषायां शब्दानां लिङ्गं शिष्टव्यवहारात् कोशाद् लिङ्गानुशासनाद् वा निर्णेयं भवति।

वैयाकरणानां मते लिङ्गम् अर्थनिष्ठं किन्तु शब्दार्थयोः तादात्म्यात् शब्दे लिङ्गस्य व्यवहारो दृश्यते, अयं पुंल्लिङ्गः अयं स्त्रीलिङ्ग इत्यादि।

प्रत्येकपुंल्लिङ्गस्य स्त्रीलिङ्गरूपं तथैव प्रत्येकस्त्रीलिङ्गस्य पुंल्लिङ्गरूपं न भवति।

पाकः ,भावः, महिमा, सन्धिः इत्यादयः शब्दाः पुंल्लिङ्गा एव सन्ति।

सम्पद्, विपद्, रात्रिः, तिस्रः,माता इत्यादयः शब्दाः विनापि टाबादि प्रत्ययेन स्त्रीलिङ्गा एव सन्ति।

कस्मात् कः स्त्रीप्रत्ययः ?
शिष्टप्रयोगं वीक्ष्य उत्सर्गापवादाभ्यां निर्णयः कर्तव्यः।

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# स्त्रीप्रत्ययान्तशब्दानां विभागः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

**सामान्यः—** अजाद्यतष्टाप्, ऋन्नेभ्यो ङीप्, षिद्गौरादिभ्यश्च, वोतो गुणवचनात्, यूनस्ति इत्यादीनि।

**जातिलक्षणः—** जातेरस्त्रीविषयादयोपधात्

**स्वाङ्गलक्षणः—** स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्।

**पुंयोगलक्षणः—** पुंयोगादाख्यायाम्।

**विविधार्थकः—** इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलचार्याणामानुक्, वयसि प्रथमे

**अ**
- अश्व— अश्वा...........
- कारक— कारिका.........

**इ**
- दाक्षि— दाक्षी...........
- रात्रि— रात्री...........

**उ**
- कुरु— कुरूः.........
- पङ्गु— पङ्गूः...........

**ऋ**
- कर्तृ— कर्त्री.........
- हर्तृ— हर्त्री...........

**न्**
- तपस्विन्— तपस्विनी......
- दण्डिन्— दण्डिनी.........

# लघुसिद्धान्तकौमुद्याम् स्त्रीप्रत्ययाः

## स्त्रीप्रत्यये सूत्रोदाहरणानां विहगावलोकनम्

### टाप्
सूत्रम्— अजाद्यतष्टाप्
उदा.—अजा। एडका। अश्वा। चटका। मूषिका। बाला। वत्सा। होडा। मन्दा। विलाता। मेधा। गङ्गा। सर्वा। इत्यादि॥

### डाप्
सूत्रम्— डाबुभाभ्यामन्यतरस्याम्
उदा.— सीमा। दामा। पामा। सुचर्मा।सुपर्वा।बहुधीवा। बहुपीवा। बहुयज्वा। बहुराजा। इत्यादि॥
- लघुसिद्धान्ते अयं नास्ति।

### चाप्
वा.— १.सूर्याद्देवतायां चाब्वाच्यः। २.षाद्यञश्चाब्वाच्यः।
सू— १.यङश्चाप्। २.आवट्याच्च।
उदा.— सूर्या। शार्कराक्ष्या। पौतिमाष्या। आम्बष्ठ्या। कारीषगन्ध्या। कौशल्या।
- लघुसिद्धान्ते प्रथमवार्तिकमेव।

### ऊङ्
१. ऊङुतः — कुरूः।
२. पङ्गोश्च— पङ्गूः।
(श्वशुरस्योका...) — श्वश्रूः।
३.ऊरूत्तरपदादौपम्ये— करभोरूः।
४.संहिताशफलक्षणवामादेश्च — संहितोरूः। शफोरूः। लक्षणोरूः। वामोरूः।

### ति
१. यूनस्तिः— युवतिः।

### ङीप्
१.उगितश्च— भवती। भवन्ती। पचन्ती। दीव्यन्ती।
२. टिड्ढाणञ्.. — कुरुचरी। नदी। देवी। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी।
(नञ्स्नञीकक्ख्युंस्तरुणतलुनानाम्...) — स्त्रैणी। पौंस्नी। शाक्तीकी। याष्टीकी। आढ्यङ्करणी। तरुणी। तलुनी।
३. यञश्च— गार्गी।४. ऋन्नेभ्यो ङीप्— कर्त्री। दण्डिनी। पत्नी।
५. वयसि प्रथमे — कुमारी। ६. द्विगोः— त्रिलोकी।
७.वर्णादनुदात्तात्तोपधात्तो नः— एनी। रोहिणी।

### ङीन्
१. शार्ङ्गरवाद्यञो ङीन्—शार्ङ्गरवी। बैदी। ब्राह्मणी। नारी। पुत्री।

### ङीष्
१. षिद्गौरादिभ्यश्च— गार्ग्यायणी। नर्तकी। गौरी। अनुड्डही। अनड्वाही। सुन्दरी ।
२. वोतो गुणवचनात्—मृद्वी। ३.बह्वादिभ्यश्च— बह्वी। (कृदिकारादक्तिनः)— रात्री। (सर्वतोऽक्तिन्नर्थादित्येके) — शकटी। ४. पुंयोगादाख्यायाम्— गोपी। सूरी ।
५. इन्द्रवरुण..— इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी। आचार्यानी। स्वार्थे — अर्याणी। क्षत्रियाणी। महत् — हिमानी। अरण्यानी। दुष्टः — यवानी। लिपिः — यवनानी।
६. क्रीतात्करणपूर्वात्— वस्त्रक्रीती। ७. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्— अतिकेशी। चन्द्रमुखी ।८.जातेरस्त्रीविषयादयोपधात् – तटी। वृषली। कठी। बह्वृची। हयी। गवयी। मुकयी। मनुषी। मत्सी। ९.इतो मनुष्यजातेः — दाक्षी॥

# लघुसिद्धान्तकौमुद्याम्
# स्त्रीप्रत्ययाः

{मूलपाठः}

❖ स्त्र्यधिकारसूत्रम्—

**सूत्रम्—** **स्त्रियाम् (४,१.३)**

**अर्थः—**अधिकारोऽयम्। समर्थानामिति यावत्॥

[१] टाप्-विधायक—
१. अजाद्यतष्टाप् (१२४९)

[२] डाप्-विधायक—
१. डाबुभाभ्यामन्यतरस्याम् (४.१.१३)

[३] चाप् विधायक—
१. सूर्याद्देवतायाँ चाब्वाच्यः (वा०)

[४] ङीप्-विधायक—
१. ऋन्नेभ्यो ङीप् (२४२)
२. उगितश्च (१२५०)
३. यञश्च (१२५२)
४. टिड्ढाणञ्० (१२५२)
५. नञ्स्नञीकक्० (वा०)
६. वयसि प्रथमे (१२५६)
७. द्विगोः (१२५७)
८. वर्णादनुदात्तात्तोप० (१२५८)
९. वनो र च (४.१.८)
१०. पादोऽन्यतरस्याम् (४.१.८)
११. अन उपधालोपिनो० (४.१.२८)
१२. दामहायनान्ताच्च (४.१.२७)
१३. केवलमामकभागधेय० (४.१.३०)

[५] ङीष्-विधायक—
१. षिद्गौरादिभ्यश्च (१२५५)
२. आमनडुहः स्त्रियां वा (गण०)
३. अन्यतो ङीष् (४.१.४०)
४. वोतो गुणवचनात् (१२५९)
५. बह्वादिभ्यश्च (१२६०)
६. कृदिकारादक्तिनः (गण०)
७. सर्वतोऽक्तिन्नर्थाद्० (गण०)
८. पुंयोगादाख्यायाम् (१२६१)
९. इन्द्रवरुणभवशर्व० (१२६३)
१०. मातुलोपाध्याययोरानुँग्वा (वा०)
११. आचार्यादणत्वं च (वा०)
१२. अर्यक्षत्रियाभ्यां वा स्वार्थे (वा०)
१३. क्रीतात्करणपूर्वात् (१२६४)
१४. स्वाङ्गाच्चोपसर्जनाद० (१२६६)
१५ जातेरस्त्रीविषयाद० (१२६९)
१६. योपधप्रतिषेधे हयगवय० (वा०)
१७. इतो मनुष्यजातेः (१२७०)
१८. नासिकोदरौष्ठ० (४.१.३०)
१९. अङ्गगात्रकण्ठेभ्य० (वा०)
२०. पुच्छाच्चेति वक्तव्यम् (वा०)
२१. बहुव्रीहेरूधसो ङीष् (४.१.२५)
२२. पाणिगृहीती भार्यायाम् (वा०)
२३. सख्यशिश्वीति भाषायाम् (४.१.६२)

[६] ङीन्-विधायक—
१. शार्ङ्गरवाद्यञो ङीन् (१२७५)
२. नृनरयोर्वृद्धिश्च (गण०)

[७] ऊङ्-विधायक—
१. ऊङुतः (१२७१)
२. पङ्गोश्च (१२७२)
३. श्वशुरस्योकाराकारलोपश्च (वा०)
४. ऊरूत्तरपदादौपम्ये (१२७३)
५. संहितशफलक्षणवामादेश्च (१२७४)

[८] ति-विधायक—
१. यूनस्तिः (१२७६)

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# ‘टाप्’प्रत्ययः

❖ टाप्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— अजाद्यतष्टाप् (४,१.४)**

**अर्थः—** अजादीनाम् अकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्।

- अजा। एडका। अश्वा। चटका। मूषिका।
- बाला। वत्सा। होडा। मन्दा। विलाता। इत्यादि॥
- मेधा। गङ्गा। सर्वा॥[१]

स्त्रीत्वद्योतनाय अजाद्यतष्टाप् इति सूत्रेण टाप् प्रत्ययः भवति। तेन च अज टाप् इति स्थितिः भवति। ततः परं चुटू इति सूत्रेण प्रत्ययाद्यस्य टापः टकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च तस्य लोपः भवति। पुनः टापः पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति तस्य लोपः इति सूत्रेण च तस्य लोपः भवति। ततश्च अज आ इति स्थितिः भवति। ततः परम् अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते सति अजा इति रूपं सिद्ध्यति। ततश्च स्वादिप्रत्यययोगेन प्रथमैकवचने अजा इति सुबन्तं पदं सिध्यति। अन्येषां रूपाणां सिद्धिप्रक्रिया अजन्तस्त्रीलिङ्गप्रकरणे रमाशब्दवत् वर्तते।

**अजादिगणः—** अजा, एडका, चटका, अश्वा, मूषिकेति जातिः। बाला, होढा, पाका, वत्सा, मन्दा, विलातेति वयः। पूर्वापहाणा। अपरापहाणा। टित्, निपातनाण् णत्वम्। **गणसूत्रम्—** संभस्त्राजिनशणपिण्डेभ्यः फलात्। संफला। भस्त्रफला। अजिनफला। शणफला। पिण्डफला। **गणसूत्रम्—** त्रिफला द्विगौ। बहुब्रीहौ त्रिफली संहतिः। **गणसूत्रम्—** सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् ।सत्पुष्पा। प्राक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा। पाककर्ण० ४.१.६४ इति ङीषोऽपवादः। **गणसूत्रम्—** शूद्रा चामहत्पूर्वा जातिः ।क्रुञ्चा। उष्णिहा। देवविशा हलन्ताः। ज्येष्ठा। कनिष्ठा। मध्यमा पुंयोगः। कोकिला जातिः। **गणसूत्रम्—** मूलान्नञः अमूला ॥ (१. अदन्तात् पृथग् अजाद्युक्तिर्ङीप्-ङीषोर्बाधनाय इत्यधिकः पाठः।)

# 'ङीप्'प्रत्ययविधिः



❖ ङीप्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्—उगितश्च (४,१.६)**

अर्थः— उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप्स्यात्।

- भवती।[१]
- भवन्ती।
- पचन्ती।
- दीव्यन्ती॥[२] (बहुषु संस्करणेषु अनयोः पाठः नास्ति।)

उ / ऋ → उगिदन्तप्रातिपदिकात् → ङीप्

शप्-श्यनोर्नित्यम्— नुँम्

हलि च— उपधादीर्घः

| | | | |
|---|---|---|---|
| भवतुँ\ भा+ (डवतुँ) | भू शप् + शतृँ | पच् शप् + शतृँ | दिव् श्यन् + शतृँ |
| भवत् + ङीप् | भो अ + अत्= | पच् अ + अत्= | दीव् य + अत्= |
| भवत् + ई= | भव नुँम् त् + ङीप्= | पच नुँम् त् + ङीप्= | दीव्य नुँम् त् + ङीप्= |
| भवती + सुँ | भवन्ती + सुँ | पचन्ती + सुँ | दीव्यन्ती + सुँ |
| भवती | भवन्ती | पचन्ती | दीव्यन्ती |

# 'ङीप्'प्रत्ययविधिः



❖ ङीप्-प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्—** [१]टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (४,१.१५)

**अर्थः—** अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्स्यात्।

- 1.टित्— कुरुचरी। नदट्— नदी। देवट्— देवी।
- 2.ढ— सौपर्णेयी।
- 3.अण्— ऐन्द्री।
- 4.अञ्— औत्सी।
- 5.द्वयसच्— ऊरुद्वयसी।
- 6.दघ्नच्— ऊरुदघ्नी।
- 7.मात्रच्— ऊरुमात्री।
- 8.तयप्— पञ्चतयी।
- 9.ठक्— आक्षिकी।
- 10.ठञ्— लावणिकी। प्रास्थिकी।[२]
- 11. कञ्— यादृशी।
- 12.क्वरप्— इत्वरी।

१. चेन्नै-संस्करणे 'अनुपसर्जनात्— अधिकारोयम्। यूनस्तिरित्यभिव्याप्य।' इत्यधिकः पाठः।
२. बहुषु संस्करणेषु 'प्रास्थिकी' इत्यधिकः पाठः।

**वार्तिकम्—** नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्।

**अर्थः—** नञ्-स्नञ्-ईकक्-ख्युन्-प्रत्ययान्तप्रातिपदिकात् एवं तरुण-तलुन्-प्रातिपदिकाभ्यां स्त्रीत्वविवक्षायां ङीप् स्यात्।

- नञ्— स्त्रैणी।
- स्नञ्— पौंस्नी।
- ईकक्— शाक्तीकी। याष्टीकी।
- ख्युन्— आढ्यङ्करणी।
- तरुणी। तलुनी॥

# लघुसिद्धान्तकौमुद्याम् स्त्रीप्रत्ययाः

# टिड्ढाणञ्... सूत्रस्थोदाहरणानां ससूत्रं तालिका

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

| प्रत्ययः | उदाहरणम् | सूत्रम् |
|---|---|---|
| 1.टित् | कुरुचरी। नदी। देवी। | चरेष्टः ३.२.१६ |
| 2.ढ | सौपर्णेयी। | स्त्रीभ्यो ढक् ४.१.१२० |
| 3.अण् | ऐन्द्री। | सास्य देवता ४.२.२४ |
| 4.अञ् | औत्सी। | उत्सादिभ्योऽञ् ४.१.८६ |
| 5.द्वयसच् | ऊरुद्वयसी। | प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५.२.३७ |
| 6.दघ्नच् | ऊरुदघ्नी। | प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५.२.३७ |
| 7.मात्रच् | ऊरुमात्री। | प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५.२.३७ |
| 8.तयप् | पञ्चतयी। | संख्याया अवयवे तयप् ५.३.४२ |
| 9.ठक् | आक्षिकी। | तेन दीव्यति खनति जयति जितम् ४.४.२ |
| 10.ठञ् | लावणिकी। प्रास्थिकी। | लवणाट्ठञ् ४.४.५२। तेन क्रीतम्। |
| 11. कञ् | यादृशी। | त्यदादिषु दृशोऽनालोचने कञ् च ३.२.६० |
| 12.क्वरप् | इत्वरी। | इण्नश्जिसर्तिभ्यः क्वरप् ३.२.१६३ |

| प्रत्ययः | उदाहरणम् | सूत्रम् |
|---|---|---|
| 1. नञ् | स्त्रैणी। | स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् |
| 2. स्नञ् | पौंस्नी। | स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् |
| 3. ईकक् | शाक्तीकी। याष्टीकी। | शक्तियष्ट्योरीकक् ४.४.५९ |
| 4. ख्युन् | आढ्यङ्करणी। | आढ्यसुभगस्थूलपलित-नग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ३.२.५६ |

**अणादिप्रत्ययाः तद्धितान्ता अपि गृह्यन्ते तेन कुम्भकारी (कर्मण्यण्) इत्यादिष्वपि ङीप्-प्रत्ययसिद्धिः।**

टित्-विधयः

- प्रत्ययः — कुरुचरी
- प्रातिपदिकम् — नदट्— नदी। देवट्— देवी।
- धातुः — स्तनन्धयी

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# ‘ङीप्’प्रत्ययविधिः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ ङीप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— यञश्च (४,१.१६)**

अर्थः— (अनुपसर्जनात्) यञन्तात् स्त्रियां ङीप् स्यात्।

○ (परत्वात्) अकारलोपे कृते— यस्येति च— ६.४.१४८

❖ यकारलोपविधायकं विधिसूत्रम्—

**सूत्रम्— हलस्तद्धितस्य (६,४.१५०)**

अर्थः— हलः परस्य तद्धितयकारस्योपधाभूतस्य लोप ईति परे।

○ गार्गी॥ १.‘हलः परस्य तद्धितयकारस्य लोप ईति परे’ चेन्नैसंस्करणस्थः पाठः।

गर्गस्य गोत्रापत्यं स्त्री
गर्ग+ यञ् (गर्गादिभ्यो यञ्)
=गार्ग्य
गार्ग्य+ ङीप्
गार्ग्य्+ ई
गार्ग्+ ई (असिद्धवदत्राभात् इत्यनेन अकारलोपस्य असिद्धत्वाद् उपधात्वं सम्पन्नम्)
गार्गी+ सुँ
गार्गी

प्र.— ‘टिड्ढाणञ्..’ इति सूत्र एव यञ्-ग्रहणं कर्तव्यं पृथक् सूत्रारम्भस्य का आवश्यकता ?
उ.— ‘टिड्ढाणञ्..’ इति सूत्रे यञ्-ग्रहणं कर्तुमुचितं तथापि ‘प्राचां ष्फ तद्धितः’ इति सूत्रे यञ्-मात्रस्यानुवृत्तये पृथक् सूत्रं कृतम्।

✓ ‘यञश्चे’ति सूत्रे चकारग्रहणस्य ‘चानुकृष्टं नोत्तरत्र’ इति प्रयोजनं नास्ति ङीबित्यस्य ‘वयसि प्रथमे’ इत्यादिषु सम्बन्धात्। न्यासकारमतानुसारं ‘च’ अनुक्तसमुच्चयार्थं तेन ‘नञ्स्नञीकक्..’ इति वार्तिकं सूत्रकारसम्मतमेव।

# ष्फान्ताद् ‘ङीष्’प्रत्ययविधिः



{मूलपाठः}

❖ ष्फ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— प्राचां ष्फ तद्धितः (४,१.१७)**

अर्थः— (अनुपसर्जनात्) यञन्तात् ष्फो वा स्यात्स च तद्धितः॥

❖ ङीष्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— षिद्गौरादिभ्यश्च (४,१.४१)**

अर्थः— षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात्।

- गार्ग्यायणी। नर्तकी। (शिल्पिनि ष्वुन्)
- गौरी। अनड्डुही। अनड्वाही। आकृतिगणोऽयम्॥

गर्गस्य गोत्रापत्यं स्त्री

गर्ग+ यञ् (गर्गादिभ्यो यञ्)

= गार्ग्य + ष्फ (षः प्रत्ययस्य)

गार्ग्य+ आयन

गार्ग्य्+ आयन (यस्येति च)

=गार्ग्यायन

गार्ग्यायन + ङीष्

गार्ग्यायन् + ई

गार्ग्यायणी+ सुँ= गार्ग्यायणी

**गौरादिगणः—** गौर, मत्स्य, मनुष्य, हय, गवय, मुकय, ऋष्य, शृङ्ग, पुट, द्रुण, द्रोण, हरिण, कण, पटर, उकण, आमलक, कुवल, बदर, बिम्ब, तर्कार, शर्कार, पुष्कर, शिखण्ड, सुषम, सलन्द, गडुज, सृपाट, सृगेठ, आढक, शष्कुल, सूर्म, सुब, सूर्य, पूष, मूष, घातक, सकलूक, सल्लक, मालक, मालत, साल्वक, वेतस, अतस, पृस, मह, मठ, छेद, आनन्द, श्वन्, तक्षन्, अनडुही, अनड्वाही, **एषणः करणे (*गणसूत्रम्*)**, देह, काकादन, गवादन, तेजन, रजन, लवण, पान, मेध, गौतम, आयस्थूण, भौरि, भौलिकि, भौलिङ्गि, औद्गाहमानि, आलिङ्गि, आपिच्छिक, आरट, टोट, नट, नाट, मलाट, शातन, पातन, पावन, सवन, आस्तरन, अधिकरण, एत, अधिकार, आग्रहायणी, प्रत्यवरोहिणी, सेवन, **सुमङ्गलात् संज्ञायाम् (*गणसूत्रम्*)**, सुन्दर, मण्डल, पिण्ड, विटक, कुर्द, गूर्द, पट, पाण्ट, लोफाण्ट, कन्दर, कन्दल, तरुण, तलुन, बृहत्, महत्, सौधर्म, **रोहिणी नक्षत्रे (*गणसूत्रम्*)**, **रेवती नक्षत्रे (*गणसूत्रम्*)** विकल, निष्फल, पुष्कल, **कटाच्छ्रोणिवचने (*गणसूत्रम्*)**, **पिप्पल्यादयश्च (*गणसूत्रम्*)**, मातामह, पितामह । **आकृतिगणोऽयम्** । इति गौरादिगणः ।

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# ‘ङीप्’प्रत्ययविधिः

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ ङीप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— वयसि प्रथमे (४,१.२०)**

**अर्थः—** प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप्स्यात्।

○ कुमारी।

प्राणिनां कालकृतावस्थाविशेषो वयः।





- पिता रक्षति कौमारे भर्ता रक्षति यौवने।
  पुत्राश्च स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति॥
- 1.बाल्यम् 2. कौमारम् 3. यौवनम् 4. वार्धक्यम्

- 1. उपचयलक्षणम्
  2. अपचयलक्षणम्

कुमारत्ववयो विशिष्टा स्त्री
कुमार + ङीप्
कुमार + ई
कुमार + ई
कुमारी+ सुँ
कुमारी

- किशोरी
- वधूटी
- चिरण्टी

# द्विगोः 'ङीप्'प्रत्ययविधिः

संस्कृतसार: छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ ङीप्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— द्विगोः (४,१.४१)

अर्थः—अदन्ताद् द्विगोर्ङीप्स्यात्।

- त्रिलोकी।
- अजादित्वात्— त्रिफला, त्र्यनीका (सेना)॥

- 'तद्धितार्थोत्तरपदसमाहारे च' इति सूत्रेण विहितः सङ्ख्यापूर्वो द्विगुस्त्रिविधः— 1.तद्धितार्थद्विगुः 2. उत्तरपदद्विगुः 3. समाहारद्विगुः। तत्र अदन्ते तद्धितार्थद्विगौ, अदन्ते समाहारद्विगौ एव प्रकृतसूत्रेण ङीप्-प्रत्ययः विधीयते। उत्तरपदद्विगौ 'पञ्चगवधनः'(पञ्च गावो धनं यस्य) इत्यादिषु बहुव्रीहिगर्भे द्विगुः पतति। तेन द्विगुसमासः प्रातिपदिकस्य अन्ते न सम्भवति अतः 'द्विगोः' इति सूत्रेण उत्तरपदद्विगौ 'ङीप्' न भवति।
- 'स नपुंसकम्' इति सूत्रेण यस्याम् एकवद्भावो विहितः सः द्विगुः द्वन्द्वश्च च नपुंसकलिङ्गो भवति। यथा पञ्चगवम्, दशगवम्। अत्र ओकारान्तद्विगुः।
- 'पात्राद्यन्तवर्जितः अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति वचनेन एतादृश-द्विगोः स्त्रियां प्रयोगः 'द्विगोः' इत्यनेनैव प्राप्तः।

### ☆ द्विगुसमासे लिङ्गनिर्णयः ☆

अनदन्तोत्तरपदः समाहारद्विगुः— नपुंसके।
अदन्तोत्तरपदः पात्राद्यन्तसमाहारद्विगुः— नपुंसके।
अदन्तोत्तरपदः समाहारद्विगुः— स्त्रीलिङ्गे।
अदन्तोत्तरपदः तद्धितार्थद्विगुः— स्त्रीलिङ्गे।
उत्तरपदद्विगुः — (त्रिलिङ्गे)

त्रयाणां लोकानां समाहारः
त्रि आम्+ लोक आम् (तद्धितार्थो...)
त्रिलोक+ ङीप्= त्रिलोकी

त्रयाणां फलानां समाहारः= त्रिफला
त्रयाणाम् अनीकानां समाहारः= त्र्यनीका

# वर्णवाचिभ्यः ‘ङीप्’प्रत्ययविधिः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ ङीप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— वर्णादनुदात्तात् तोपधात् तो नः (४,१.३९)**

**अर्थः—**वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात् प्रातिपदिकाद्वा ङीप्, तकारस्य नकारादेशश्च।

- एनी, एता।
- रोहिणी, रोहिता॥




एत= श्वेतः (वर्णानां त-ण-ति-नि-तान्तानाम्-३३ इति फिट्सूत्रेण आद्यच् उदात्तः, अनुदात्तपदमेकवर्जम्- ६.१.१५२ इति सूत्रेण परिशिष्टभागः अनुदात्तः तेन ‘एत’ तकारोत्तर-अकारः अनुदात्तः।)

एत + ङीप्
एन + ई
एन् + ई (यस्येति च)
एनी, एता।

रोहित= श्वेतः

रोहित + ङीप्
रोहिन + ई
रोहिन् + ई (यस्येति च)
रोहिणी, रोहिता

- घृतादिगणे पाठात् उदात्तात्— श्वेता।
- अवदात-शब्दस्तु विशुद्धवाची, न वर्णवाची तेन अवदाता।

# उदन्ताद् गुणवाचिनो 'ङीष्'प्रत्ययविधिः



❖ ङीष्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— वोतो गुणवचनात् (४,१.४४)**

पदच्छेदः, पदपरिचयः— वा +उतः+ गुणवचनात्।

वा इत्यव्ययम्, उतः/ गुणवचनादिति पञ्चम्यैकवचनम्।

अर्थः— उदन्ताद् गुणवाचिनो वा ङीष् स्यात्।

○ मृद्वी, मृदुः॥

मृदुत्वगुणविशिष्टा
मृदु + ङीष्
मृदु + ई
मृद् व् + ई
मृद्वी + सुँ
मृद्वी।
मृदुः। (इयं ब्राह्मणी)

१. लघु + ङीष् → लघ्वी।
२. गुरु + ङीष् → गुर्वी।
३. पृथु + ङीष् → पृथ्वी।
४. बहु + ङीष् → बह्वी।
५. पटु + ङीष् → पट्वी।
६. मृदु + ङीष् → मृद्वी।
७.साधु+ङीष्→साध्वी।
८. उरु + ङीष् → उर्वी
९. तनु + ङीष् → तन्वी

- व्याकरणशास्त्रे शब्दानां सामान्यरूपेण चतुर्षु गणेषु विभाजनं कृतम् अस्ति— १.जातिवाचकशब्दाः २.गुणवाचकशब्दाः ३.क्रियावाचकशब्दाः, तथा च ४.संज्ञावाचकशब्दाः। एतेभ्यः गुणवाचकशब्दानां विषये प्रकृतसूत्रं प्रवर्तते।
- गुण इति किम् ? मृदु= कोमल। लघु= छोटा। गुरु= भारी। पटु= चतुर। साधु= ठीक। तनु= पतला। आदि।
- गुणवचन इति किम् ? गुणम् उक्तवान् इति गुणवचनः, तस्मात् गुणवचनात्। ब्रू / वच्-धातोः बाहुलकाद् भूते कर्तरि ल्युट्। यः प्राग्गुणम् अभिधाय पश्चात् मतुँप्-लोपात् उपचाराद्वा तद्वति वर्तते स गुणवचनः।

*अर्थात् जिस शब्द ने पहले गुण को कहा था पर अब गुणयुक्त द्रव्य को कह रहा हो उसे गुणवचन कहते हैं।*

# गुणवचनविषये आचार्याणां सम्मतिः



## वोतो गुणवचनात् इति सूत्रे भाष्यकारेण गुणलक्षणं उक्तम्—

१.सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

२.उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि। वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः॥

*अनेन प्रकारेण द्रव्यभिन्नः,जातिभिन्नः, क्रियाभिन्नः च पदार्थः गुणसंज्ञकः भवति — इति अनयोः कारिकयोः आशयः।*

- **(बालमनोरमायाम्)** तथाच जातिभिन्नत्वे सति क्रियाभिन्नत्वे सति द्रव्यभिन्नत्वे सति समवेतत्वं गुणलक्षणं निष्कृष्टं वेदितव्यम् । समवेतत्वाऽभावादभावनिरासः । अत्र नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव इति तार्किकाभिमतविशेषपदार्थाङ्गीकारे तद्भिन्नत्वमपि निवेश्यम्।
- **(पदमञ्जर्याम्)** तदेवम् 'सत्वे निविशते अपैति आधेयश्चाक्रियाजश्च' इत्येकं लक्षणम् ।'सत्वे निविशते पृथग्जातिषु' इत्यादिकं चापरमिति लक्षणद्वयमनुसर्तव्यम् ॥
- **लघुशब्देन्दुशेखरे—** अत्र गुणवचनशब्देन समास-कृदन्त-तद्धितान्त-अव्यय-सर्वनाम-जाति-संख्या-संज्ञाशब्द-व्यतिरिक्तम् अर्थवद् शब्दस्वरूपम् गुणवचनसंज्ञं भवति इति भाष्यकारस्य आशयः वर्तते । *(समास-कृत्-तद्धिताद्यतिरिक्तास्तु उणादिनाम् अव्युत्पन्नत्वे एव सम्भवतीति बोध्यमिति दाधिमथाः )* सत्वे निविशते....इत्यादि गुणलक्षणं त्वेकदेश्युक्तिर्बहुविशेषणानां वैयर्थ्यात्, भाष्यकृताऽव्याख्यानाच्च तस्माद् आकडारसूत्रोक्तमेव भाष्यसम्मतमिति।

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# बह्वादिभ्यः'ङीष्'प्रत्ययविधिः

संस्कृतसार: छिद्यन्ते सर्वसंशयाः

❖ ङीष्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— बह्वादिभ्यश्च (४,१.४५)**

**अर्थः—** एभ्यो वा ङीष् स्यात्।

○ बह्वी, बहुः।

**गणसूत्रम्—** कृदिकारादक्तिनः[१]।

**अर्थः—** 'क्तिन्'प्रत्ययावयवभिन्नः कृत्प्रत्ययसम्बन्धी यः इकार तदन्तात् प्रातिपदिकात् ङीष् वा स्यात्।

**गणसूत्रम्—** सर्वतोऽक्तिन्नर्थादित्येके।

**अर्थः—** अन्येषामाचार्याणां मते क्तिन्नर्थप्रत्ययावयवभिन्नः कृद्-अकृत्प्रत्ययसम्बन्धी यः इकार तदन्तात् प्रातिपदिकात् ङीष् वा स्यात्।

○ रात्री, रात्रिः। शकटी, शकटिः॥

बहु + ङीष्
बह् व् + ई =बह्वी, बहुः।

रात्रि + ङीष्
रात्रि+ ई=रात्री, रात्रिः।

❖ 'क्तिन्'प्रत्ययावयवभिन्नात्
❖ कृत्-प्रत्ययसम्बन्धि-इकारान्तात्।

❖ 'क्तिन् अर्थ'प्रत्ययावयवभिन्नात्।
❖ कृत्-अकृत्-प्रत्ययसम्बन्धि-इकारान्तात्।

**बह्वादिगणः —** बहु, पद्धति, अङ्कति, अञ्चति, अंहति, वंहति, शकटि, ***गणसूत्रम्— शक्तिः शस्त्रे*** — *(तत्वबोधिन्यां तु – शक्तिः शक्ती । शस्त्रे किम् । शक्तिः सामर्थ्यम् । शक्तिः शस्त्रीति पाठे तु शब्दद्वयम् । शस्त्री शस्त्रि ।)* शारि, वारि, गति, अहि, कपि, मुनि, यष्टि। ***गणसूत्रम्— इतः प्राण्यङ्गात्।*** ***गणसूत्रम्— कृदिकारादक्तिनः*** । ***गणसूत्रम्— सर्वतोऽक्तिन्नर्थादित्येके।*** धमनी,धमनिः चण्ड, अराल, कमल, कृपाण, विकट, विशाल, विशङ्कट, भरुज, ध्वज। ***गणसूत्रम्— चन्द्रभागान्नद्याम्*** — कल्याण, उदार, पुराण, अहन् । आकृतिगणोऽयं तेन भाग, गल , राग इत्यादि ग्रहणम्।

१. अस्मिन् गणसूत्रे 'रात्री, रात्रिः' इति पाठः भ्रमजनकः। उणादीनां व्युत्पत्तिपक्षे उभयोः गणसूत्रयोः उपात्तानि सर्वाण्युदाहरणानि 'कृदिकारादक्तिनः' इत्यस्य तथा अव्युत्पत्तिपक्षे 'सर्वतोऽक्तिन्नर्थादित्येके' इत्यस्य ज्ञेयानि। वस्तुतस्तु पूर्वगणसूत्रस्यापेक्षया द्वितीयसूत्रस्य क्षेत्रं विस्तृतं वर्तते। अतः उणादीनां व्युत्पत्ति-अव्युपत्त्युभयोः पक्षयोः सर्वाणि उदाहरणानि 'सर्वतोऽक्तिन्नर्थादित्येके' इत्यत्रैव स्युः। काशिका-प्रक्रियाकौमुदीत्यादिग्रन्थेषु तथैव दृष्टत्वात्।

# काशिका न्यास-पदमञ्जरीमतम्



## काशिका

बह्वादिभ्यश्च ॥ ४५ ॥

'बहु' – इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति । बहुः, बह्वी ।

बहु । पद्धति । अङ्कति । अञ्चति । अंहति । वंहति । शकटि । शक्तिः शस्त्रे । शारि । वारि । गति । अहि । कपि । मुनि । यष्टि । ❀ इतः प्राण्यङ्गात् ❀ । ❀ कृदिकारादक्तिनः ❀ । ❀ सर्वतोऽक्तिन्नर्थादित्येके ❀ । चण्ड । अराल । कमल । कृपाण । विकट । विशाल । विशङ्कट । भरुज । ध्वज । ❀ चन्द्रभागान्नद्याम् ❀ । कल्याण । उदार । पुराण । अहन् ।

बहुशब्दो गुणवचन एव, तस्येह पाठ उत्तरार्थः ॥

## पदमञ्जरी

यं पठन्ति—शस्त्रिः, शस्त्री । इतः प्राण्यङ्गादित्यादीनि त्रीणि वाक्यानि यथोत्तरमधिकविषयाणि । तत्रोत्तरं वाक्यद्वयम् 'रात्रेश्चाजसौ' इत्यत्रैव व्याख्यातम् । इकारान्तात्प्राण्यङ्गवाचिनो वा ङीष् भवति—धमनिः, धमनी । 'सर्वतोऽक्तिन्नर्थात्' इत्येव ङीषि सिद्धे शकट्यादीनामिकारान्तानां पाठः प्रपञ्चार्थः । पद्धतिशब्दः क्तिन्नन्तः, पादस्य हतिः पद्धतिः, 'हिमकाषिहतिषु

## न्यासः

शक्ती इति शब्दद्वयं पठन्ति—शक्तिः, शक्ती; शस्त्रिः, शस्त्री । इतः प्राण्यङ्गादिति । इकारान्तात् प्राण्यङ्गवाचिनो वा ङीष् भवति—धमनिः, धमनी । इत इति किम् ? समर्था ग्रीवा । प्राण्यङ्गादिति किम् ? श्रेणिः । कृदिकारादक्तिनः । सर्वतोऽक्तिन्नर्थादित्येके । अस्यार्थः 'रात्रेश्चाजसौ' इत्यत्रैव व्याख्यातः । यदि सर्वतोऽक्तिन्नर्थात् ङीष् भवति, शकट्यादीनां गणे किमर्थं इकारान्तानां पाठः ? तस्यैव प्रपञ्चार्थः । पद्धतिशब्दस्याक्तिन्नर्थादिति प्रतिषेधे प्राप्ते पाठः । पादस्य हतिः = पद्धतिः,

# काशिका न्यास-पदमञ्जरीमतम्



## काशिका

रात्रेश्चाजसौ ॥ ३१ ॥

जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दाद् ङीप् प्रत्ययो भवति । या रात्री सृष्टा । रात्रीभिः ।

अजसाविति किम् ? यास्ता रात्रयः ॥

अजसादिष्विति वक्तव्यम् * । रात्रिं सहोषित्वा ।

कथं तिमिरपटलैरवगुण्ठिताश्च रात्र्यः ? ङीषयं बह्वादिलक्षणः, तत्र हि पठ्यते – 'कृदिकारादक्तिनः', 'सर्वतोऽक्तिन्नर्थादित्येके' इति ॥

## पदमञ्जरी

...जसौ ॥ कथमित्यादि । दीर्घान्ताज्जसि 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घप्रतिषेधाद्यणादेशे 'रात्र्यः' इति प्रयोग उपपद्यते, ह्रस्वान्तस्य तु 'जसि च' इति गुणे 'रात्रयः' इति रूपं स्यात् । दीर्घान्तश्च रात्रिशब्दः संज्ञाछन्दसोरपि जसि न सम्भवति, अजसाविति प्रतिषेधात्, किं पुनर्भाषायामिति प्रश्नः । ङीषयमित्यादि । बह्वादिषु रात्रिशब्दो न पठ्यत इति चेत्, तत्राह– तत्र हीति । कृत इकारः कृदिकारः, तदन्तान्ङीष् भवति 'दृजागृभ्यां विः', दर्विः, दर्वी; यस्तु क्तिन्सम्बन्धी तदन्तान्न भवति—कृतिः, हृतिः । सर्वत इति । कृदिकारादकृदिकाराच्चेत्यर्थः । यस्तु क्तिन्नर्थस्तस्मान्न भवति—'आक्रोशे नञ्यनिः', अकरणिः, अहरणिः । रात्रिशब्दोऽयम् 'राशदिभ्यां त्रिप्' इति व्युत्पत्तिपक्षे कृदिकारान्तः, अव्युत्पत्तिपक्षे 'सर्वतोऽक्तिन्नर्थात्' इति ङीष् । सूत्रं तु ङीबर्थम्— रात्री व्यख्यत्, रात्रीभिरस्मा अहभिर्दशस्येत्; अत्राद्युदात्तत्वं भवति ॥

## न्यासः

...मित्यादि । रात्र्य इति । रात्रिशब्दस्य जसन्तस्य प्रयोगः । एवं हि 'दीर्घाज्जसि च' इति सवर्णदीर्घत्वे प्रतिषिद्धे यणादेश उपपद्यते, नान्यथा । यदि तु रात्रिशब्दस्यायं प्रयोगः स्यात् ततः 'जसि च' इति गुणे कृतेऽयादेशे च रात्रय इति रूपं स्यात् । ईकारान्तश्च रात्रिशब्दो न सम्भवति; अजसाविति ङीप्प्रतिषेधात् । ततश्च रात्र्य इति प्रयोगो नोपपद्यत इत्यभिप्रायः । ङीपयमित्यादि । ननु च न रात्रिशब्दो बह्वादिषु पठ्यते, तत्कथं बह्वादिलक्षणस्ततो ङीष् भविष्यति? इत्यत आह—तत्र हीत्यादि । कृदिकारादक्तिन इति । कृत इकारः कृदिकारः, तदन्तान् ङीष् भवति । 'वृदृभ्यां विन्' वर्वी, दर्वी । यस्तु क्तिन्सम्बन्धी तदन्तान्न भवति—'स्त्रियां क्तिन्', कृतिः, हृतिः । सर्वतोऽक्तिन्नर्थादित्येक इति । एक आचार्याः सर्वतोऽक्तिन्नर्थात् कृदिकारादकृदिकाराच्च ङीष् भवतीत्याहुः, राजिः, राजी । राजिशब्दोऽव्युत्पत्तिपक्षे कृदिकारान्तो न भवति । अक्तिन्नर्थादिति न विद्यते क्तिन्नर्थो यस्य सोऽक्तिन्नर्थः, तस्मात् सर्वतो ङीष् भवति । यस्तु क्तिन्नर्थस्तदन्तान्न भवति—कृतिः, हृतिः । 'आक्रोशे नञ्यनिः'—अकरणिः, अहरणिः । रात्रिशब्दश्चायं व्युत्पत्तिपक्षे कृदिकारान्तो भवति, 'रा आदाने', 'राशदिभ्यां त्रिप्' रात्रिः, तस्मात् पक्षे ङीष्- रात्री । अव्युत्पत्तिपक्षे तु कृदिकारान्तो न भवति, ततः 'सर्वतोऽक्तिन्नर्थात्' इति ङीष् ॥

नव्यवैयाकरण-प्रथमप्रक्रियाकार-धर्मकीर्तिविरचिते
रूपावतारे



**बह्वादिभ्यश्च** (IV. 1. 45.)—बहु इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति ; बह्वी बहुः , पद्धती पद्धतिः । **प्राण्यङ्गवाचिनो वा ङीष् वक्तव्यः** (वा.) इति अङ्गुली अङ्गुलिः, श्रोणी, श्रोणिः। **कृदिकारादक्तिनो वा ङीष् वक्तव्यः** (वा.) ; कृतः इकारः कृदिकारः ; दार्विः दर्वी ; दॄ विदारणे इति धातोः विन् प्रत्ययः । अक्तिनः इति किम् ? कृतिः, हृतिः । **सर्वतोऽक्तिन्नर्थादित्येके** (ग) इति राजिः राजी, धूलिः धूली । अक्तिन्नर्थादिति किम् ? ग्लानिः, म्लानिः, ज्यानिः, हानिः । **पुंयोगादाख्या-**

श्रीरामचन्द्राचार्यप्रणीतायाम्
# प्रक्रियाकौमुद्याम्



बह्वादिभ्यश्च ॥४।१।४५॥

बह्वी । बहुः । पद्धतिः । पद्धती इत्यादि । इतः प्राण्यङ्गात् । अङ्गुलिः । अङ्गुली । "कृदिकारादक्तिनः" [ वा० ]। सर्वतोऽक्तिन्नर्थादित्येके [ वा० ] राजिः । राजी । आजिः । आजी । अक्तिनः किम् । बुद्धिः । मतिः ।

श्रीकृष्णपण्डितप्रणीता
प्रकाशव्याख्या

भागी । चन्द्रभागा । नद्यां किम् । चन्द्रभागा देवता । "इतः प्राण्यङ्गात्" [ग०सू०] इदन्तात्प्राण्यङ्गवाचिनो वा ङीष् स्यादित्यर्थः । "कृदिकारादक्तिनः" [ ग० सू० ] इति चापरम् । कृतः प्रत्ययस्य सम्बन्धीय ईकारस्तदन्तान्ङीष् वा स्यात् यस्तु क्तिन् सम्बन्धी तदन्तान्न भवति "सर्वतोऽक्तिन्नर्थादित्येके' [ ग० सू० ] इति च तृतीयम् । सर्वतः कृतोऽकृतो वा इकारात् क्तिनः प्रत्ययस्यार्थे यो जातस्तद्भिन्नान्ङीष् वा स्यादित्येके मन्यन्ते । त्रीण्येतानि वाक्यानि यथोत्तरमधिकविषयाणि । राजी । आजीति । राजृ दीप्तौ । अज गतौ । "इणजादिभ्यः" । इतीण् । णित्त्वादुपधावृद्धिः । अक्तिन्नर्थादिति किम् । "आक्रोशे नञ्यनिः" [ ३।३।११२ ] अकरणिस्ते वृषल भूयात् । अजीवनिः । अत्रापि मा भूत् । एवं च बह्वादिषु शकट्यादीनां पाठः प्रपञ्चार्थः । सर्वत इत्येव सिद्धेः । व्युत्पत्तिपक्षे तु कृदिकारादिति । अत एव रात्रेरपि भवति रात्रिः । रात्री । युवतेरपीच्छन्ति, युवतिः । युवतीति ।

# लघुसिद्धान्तकौमुद्याम्

## वैयाकरणसिद्धान्तकौमुदी

## वैयाकरणसिद्धान्तकौमुदी विविधटीकाश्च



५०३ बह्वादिभ्यश्च । ( ४-१-४५ ) एभ्यो वा ङीष्स्यात् । बह्वी, बहुः । 'कृदिकारादक्तिनः' (ग ५०) । रात्रिः, रात्री । 'सर्वतोऽक्तिन्नर्थादित्येके' (ग ५१) शकटिः, शकटी । अक्तिन्नर्थात् किम्-अजननिः । क्तिन्नन्तत्वादप्राप्ते विध्यर्थं पद्धति-शब्दो गणे पठ्यते । 'हिमकाषिहतिषु च' ( सू ९९२ ) इति पद्भावः । पद्धतिः,

३४४५ । रात्रेश्चाजसौ ।४।१।३१। रात्रिशब्दान्ङी-ष्स्यात् अजस्विषये छन्दसि । रात्री व्यख्यदायती । लोके तु—( ग. ) कृदिकारात्–इति ङीष्यन्तोदात्तः ।

### बालमनोरमा

न गुणवचनत्वमिति न वैयर्थ्यमिति भावः । **कृदिकारादक्तिनः** । इति बह्वाद्यन्तर्गण-सूत्रम् । कृतो य इकारस्तदन्तात् प्रातिपदिकाद् ङीष् वा स्यात्, न तुक्ति न्नन्तादित्यर्थः । **रात्रिः, रात्रीति** । 'राशदिभ्यां त्रिप्' इति राधातोरौणादिकस्त्रिप् । गुणवचनत्वाभावाद् उदन्तत्वाभावाच्चाप्राप्ते वचनम् । **सर्वतोऽक्तिन्नर्थादित्येके** । इत्यपि बह्वाद्यन्तर्गण-सूत्रमेव । कृदिकारान्तादकृदिकारान्तादपि ङीष् वा स्यात्, न तु क्तिन्नर्थकप्रत्ययान्ता-दित्यर्थः । **शकटिः, शकटीति** । शकटिशब्दस्य अव्युत्पन्नप्रातिपदिकत्वात् कृदन्त-त्वाभावात् सर्वत इति वचनम् । अव्युत्पत्तिपक्षे रात्रिशब्दोऽप्युदाहरणं बोध्यम् ।

### सुबोधिनी

राशदिभ्यां त्रिरिति व्युत्पत्तिपक्षे कृदिकारान्तः अव्युत्पत्तिपक्षे तु 'सर्वतो ऽक्तिन्नर्थात्–' इति ङीष् बोध्यः ॥

### दाधिमथी

एभ्यो वा ङीष् स्यात् ॥ बह्वी । बहुः ॥ **कृदिकारादक्तिनः** ❀ ॥ राजिः । राजी ॥ भावः ॥ १ राजिरिति रजधातोः 'इञ् वपादिभ्यः' इतीञि 'इक् कृष्णादिभ्यः' इतीकि वा बोध्यम् । 'रात्रिरिति तु लेखकप्रमादजः' तस्योणादित्वेनाव्युत्पन्नत्वादिति बोध्यम् ॥ '**सर्वतोऽक्तिन्नर्थात्**' इत्यनेन सिद्धत्वाच्च ॥

# पुंयोगलक्षणो 'ङीष्'प्रत्ययविधिः

❖ ङीष्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— पुंयोगादाख्यायाम् (४,१.४८)**

अर्थः— या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष्।

सरलार्थः— यत् प्रातिपदिकं प्राक् पुंसो वाचकम् आसीत्, पश्चात् पुंयोगात् हेतोः स्त्रियां वर्तते तस्मात् अदन्तप्रातिपदिकात् 'ङीष्' स्यात्।

○ गोपस्य स्त्री= गोपी।

वार्तिकम्— पालकान्तान्न।[१] ('गोपालिकादीनां प्रतिषेधः' इत्थं भाष्ये पठितम्।)

अर्थः— 'पालक'शब्दः अन्ते अस्ति यस्य तथाभूतात् प्रातिपदिकात् स्त्रियां पुंयोगलक्षणः ङीष्-प्रत्ययो न स्यात्।

१. लघुसिद्धान्तकौमुद्याः बहुषु संस्करणेषु अस्मात् वार्तिकात् परं 'गोपालिका। अश्वपालिका।' इति प्रयोगद्वयमुपलभ्यते। एतन्न युक्तं प्रतिभाति। यतोहि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इति सूत्रेणात्र 'इत्वम्' भवति। अतः अस्मात् सूत्रात् परमेव उभयोः पाठः युक्तः।

गोपस्य स्त्री
गोप + ङीष्
गोप + ई
गोप् + ई
गोपी + सुँ
गोपी




❑ अत्र पुंयोगः दाम्पत्यलक्षणः एवेति नाग्रहः। अपितु पितापुत्रीभावः भ्रातृभगिनीभावादिरपि गृह्यते।

❑ भाष्ये कृतभूरिश्रमाः नागोजिभट्टास्तु 'यथैव असौ अकुर्वती किञ्चित् पापं भर्तृकृतान् वधबन्धनादीन् क्लेशान् लभते एवं शब्दमपि लभते' इति भाष्यवचनात् दाम्पत्यरूपसम्बन्धमेव स्वीक्रियन्ते। अतः तेषां मते केकयी देवकी इत्यादिषु गौरादित्वेन ङीष् बोध्यः।

❑ दाधिमथास्तु 'भर्तृकृतान्..' इति भाष्ये भर्तृपदम् उपलक्षणपरतया योजयन्ति। तेन देवकात्मजा देवकी श्यालभगिनी श्याली इत्यादयोऽपि ङीष् बोध्या।

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# ककारात् पूर्वम् अकारस्य इत्वविधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ प्रत्ययस्थ-ककारात् पूर्वम् अकारस्य इत्वविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्—** प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुँपः (७,३.४४)

**अर्थः—** प्रत्ययस्थात् कात् पूर्वस्याकारस्य इकारः स्याद् आपि, स आप् सुँपः परो न चेत्।

- गोपालिका। अश्वपालिका।
- सर्विका। कारिका।
- अतः किम् ? नौका।
- प्रत्ययस्थात्किम् ? शक्नोतीति शका।
- असुपः किम् ? बहुपरिव्राजका नगरी।

बहवः परिव्राजकाः यस्यां नगर्यां सा
बहु जस् + परिव्राजक जस्
बहुपरिव्राजक + टाप्

अ
इ
प्रत्ययस्य अन्त्य-उपान्त्य
क




अयम् 'आप्'प्रत्ययः सुँपः परो न भवेत्

**गोपालकस्य स्त्री**
गोपालक + टाप्
गोपालक + आ
गोपालिक + आ
गोपालिका + सुँ
गोपालिका

गां पालयतीति विग्रहे 'कर्मण्यण्' इत्यण्-प्रत्यये 'णेरनिटि' इति णेर्लोपे उपपदसमासे च कृते 'गोपालः' इति निष्पद्यते। ततः गोपाल एव गोपालकः, स्वार्थे कः। 'गोपालकस्य स्त्री' इति विग्रहे पुंयोगे ङीषि प्राप्ते प्रकृतवार्तिकेन तन्निषेधे 'अजाद्यतष्टाप्' इत्यनेन टापि 'प्रत्ययस्थात्...' इति सूत्रेण इत्वे विभक्तिकार्ये च कृते रूपसिद्धिः।

**अज्ञाता सर्वा**
अव्ययसर्वनाम्नामकँच् प्राक्टेः
सर्व + टाप् = सर्वा
सर्व् अकँच् आ
सर्वक् आ
सर्विका

**करोति (या सा स्त्री)**
ण्वुल्तृचौ, युवोरनाकौ
कृ + ण्वुल्
कृ + वु
कार् + अक = कारक
कारिक + टाप्
कारिका

# पुंयोगलक्षणो 'चाप्'प्रत्ययविधिः



❖ पुंयोगे चाप्-प्रत्ययविधायकं वार्तिकम्—

**वार्तिकम्**— सूर्याद्देवतायां चाब्वाच्यः।

**अर्थः**— देवताभूतायां स्त्रियां पुंयोगे वर्तमानात् सूर्यशब्दात् चाप्-प्रत्ययः स्यात्।

- सूर्यस्य स्त्री देवता= सूर्या।
- देवतायां किम् ? –

❖ यलोपविधायकं वार्तिकम्—

**वार्तिकम्**— सूर्यागस्त्ययोश्छे च ङ्यां च।

**अर्थः**— 'ङी'प्रत्यये 'छ'प्रत्यये च परे सूर्य-अगस्त्ययोः उपधाभूतस्य यकारस्य लोपः स्यात्।

- यलोपः— सूरी (कुन्ती) ; मानुषीयम्॥

**सूर्यस्य स्त्री (देवता)**

सूर्य + चाप्

सूर्य + आ (चुटू)

सूर्य + आ (अकः सवर्णे दीर्घः)

सूर्या

**सूर्यस्य स्त्री (मानुषी)**

सूर्य + ङीष्

सूर्य् + ई (यस्येति च)

सूर् + ई (सूर्यागस्त्ययोश्छे...)

सूरी






# पुंयोगे 'आनुक्' 'ङीष्'प्रत्ययविधिश्च



❖ 'आनुँक्'आगम 'ङीष्'प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुलाचार्याणामानुँक् (४,१.४९)**

अर्थः— एषामानुँगागमः स्यात् ङीष् च।

- इन्द्रस्य स्त्री= इन्द्राणी।
- वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी।

महत्त्वार्थे'आनुँक्'आगम 'ङीष्'प्रत्ययविधायकं वार्तिकम्— हिमारण्ययोर्महत्त्वे।

अर्थः— महत्त्वविशिष्टे चार्थे हिम-अरण्यशब्दाभ्याम् आनुँक्-ङीषौ स्याताम्।

- महद् हिमं= हिमानी। महद् अरण्यम् =अरण्यानी।

दोषार्थे'आनुँक्'आगम 'ङीष्'प्रत्ययविधायकं वार्तिकम्— यवाद्दोषे।

अर्थः— दोषार्थे द्योत्ये यवप्रातिपदिकात् आनुँक्-ङीषौ स्याताम्।

- दुष्टो यवो= यवानी। (अजवाँइन इति भाषा)

अक्षरविन्यासे'आनुँक्'आगम 'ङीष्'प्रत्ययविधायकं वार्तिकम्— यवनाल्लिप्याम्।

अर्थः— लिपिविशेषद्योत्ये यवनप्रातिपदिकात् आनुँक्-ङीषौ स्याताम्।

- यवनानां लिपिः=यवनानी ।

इन्द्रस्य स्त्री
इन्द्र आनुँक्+ ङीष्
इन्द्र आन्+ ई
इन्द्रान् + ई
इन्द्राणी

शिवं= मङ्गलम् आनयति (स्त्री)
शिव+आ+नी+ई (गौरादित्वात् ङीष्)
शिवानी

# पुंयोगलक्षणो 'ङीष्'प्रत्ययविधिः



{मूलपाठः}

❖ आनुँक् आगम 'ङीष्'प्रत्ययविधायकं वार्तिकम्— मातुलोपाध्याययोरानुँग्वा।

○ मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी।

❖ णत्वनिषेधकं वार्तिकम्— आचार्यादणत्वं च।

अर्थः— पुंयोगे आचार्यशब्दात् आनुँक्-ङीषौ स्याताम् णकाराभावश्च च।

○ आचार्यस्य स्त्री= आचार्यानी। (आचार्या स्वयं व्याख्यात्री)[१]

❖ स्वार्थे'आनुँक्'आगम 'ङीष्'प्रत्ययविधायकं वार्तिकम्— (अर्यक्षत्रियाभ्यां वा स्वार्थे)

अर्थः— अर्य-क्षत्रियप्रातिपदिकाभ्यां स्वार्थे= जातिवाच्ये स्त्रीत्वद्योतनाय आनुँक्-ङीषौ स्याताम्।

○ अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया॥

१. अयं पाठः चेन्नै संस्करणस्थः।

एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्यर्थमुपाध्यायः स उच्यते॥
उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः। सङ्कल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥

# ‘ङीष्’प्रत्ययविधिः



❖ ‘ङीष्’प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्—** **क्रीतात्करणपूर्वात् (४,१.५०)**

**अर्थः—** क्रीतान्ताद् अदन्तात् करणादेः स्त्रियां ङीष्स्यात्।

- वस्त्रक्रीती।
- क्वचिन्न— धनक्रीता॥

१-‘वस्त्रेण क्रीता’ इति विग्रहे ‘कर्तृकरणे—’ इति सूत्रेण ‘गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः’ इति परिभाषया सुबुत्पत्तेः पूर्वं समासेन निष्पन्नाद् वस्त्रक्रीतशब्दान् ङीष् प्रत्ययः॥

२-‘कर्तृकरणे—’ इति सूत्रे बहुलग्रहणेन निरुक्तपरिभाषायाः क्वचिदप्रवृत्तौ सुबुत्पत्त्यनन्तरं समासे सुपः प्रागन्तरङ्गत्वाट्टापि समासे कृते ‘धनक्रीता’ इति जाते तस्य चादन्तत्वाभावान्न ङीष् तदाह—क्वचिन्नेति॥

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# स्वाङ्गवाचिभ्यः वा 'ङीष्'प्रत्ययविधिः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ 'ङीष्'प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्**— **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्॥ (४,१.५४)**

**अर्थः**— असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्ताददन्तान् ङीष्वा स्यात्।

- केशानतिक्रान्ता— अतिकेशी, अतिकेशा।
- चन्द्रमुखी, चन्द्रमुखा।
- असंयोगोपधात्किम् ? सुगुल्फा।
- उपसर्जनात्किम् ? शिखा॥

असंयोगोपधम्
उपसर्जनम्
स्वाङ्गम्
तदन्तात्
अदन्तात्
वा ङीष्

**(स्वाङ्गलक्षणम्)**

**१.अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। २.अतत्स्थं तत्र दृष्टं च, ३. तेन चेत्तत्तथायुतम्॥**

अर्थः— १.न विद्यते द्रवो (द्रवत्वम्= तरलता) यस्मिन् तद् अद्रवम्— सुकफा, सुस्वेदा। मूर्तिः (=अवयवसंयोगः) अस्यास्तीति मूर्तिमत्— सुज्ञाना। प्राणिषु विद्यमानं प्राणिस्थम्— सुमुखा शाला। अविकारजम् = रोगादिविकार-अजन्यं च यत् तत् प्रथमं स्वाङ्गम् (सुशोफा) । २. तच्छब्देन प्राणी परामृश्यते। न तत्स्थम्= अतस्थम्= अप्राणिस्थम्, तत्र= प्राणिनि दृष्टं यत् तदपि स्वाङ्गम्। (सुकेशी सुकेशा वा रथ्या) ३. तेन= प्राणिस्थेन स्तनाद्यङ्गाकृतिकावयवविशेषेण तत्= अप्राणिद्रव्यं प्रतिमादि तथा= प्राणिद्रव्यवद् युतम्= सम्बद्धं चेद् भवति तदा तत्= स्तनाद्याकृतिकम् अप्राणिनोऽपि स्वाङ्गम्। (सुस्तनी सुस्तना वा प्रतिमा)

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

# ‘ङीष्’प्रत्ययनिषेधः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ ‘ङीष्’प्रत्ययनिषेधकं सूत्रम्— {मूलपाठः}

**सूत्रम्**— न क्रोडादिबह्वचः (४,१.५६)

**अर्थः**— क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्।

- कल्याणक्रोडा।
- आकृतिगणोऽयम्।
- सुजघना॥

**क्रोडादिगणः**— क्रोड (क्रोडा), नख, खुर, बाल, शफ, गुद। क्रोडादिराकृतिगणः तेन भग, गल, घोण, नाल, भुज, कर, शिखा इत्यादयो ग्राह्या।

**स्वाङ्गवाचकक्रोडादेः उदाहरणम्**

कल्याणी क्रोडा यस्याः सा

अश्वानाम् उरः = वक्षःस्थलं क्रोडा

कल्याणी सुँ + क्रोडा सुँ (अनेकमन्यपदार्थे)

कल्याणक्रोडा (स्त्रियाः पुंवद् भाषितपुस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु)

कल्याणक्रोड (गोस्त्रियोरुपसर्जनस्य)

कल्याणक्रोड + (स्वाङ्गाच्चोप.....इति ङीष् प्राप्ते)

कल्याणक्रोड + टाप् = कल्याणक्रोडा

**स्वाङ्गवाचक-बह्वजन्तस्य उदाहरणम्**

सु शोभने जघने यस्याः सा

सु + जघन औ (अनेकमन्यपदार्थे)

सुजघन+ टाप्

सुजघना

# ‘ङीष्’प्रत्ययनिषेधः



{मूलपाठः}

❖ ‘ङीष्’प्रत्ययनिषेधकं सूत्रम्—

**सूत्रम्—** नखमुखात् सञ्ज्ञायाम् (४,१.५८)

**अर्थः—** (नख-मुखान्तात् प्रातिपदिकात् सञ्ज्ञायां विषये) न ङीष्।

❖ नस्य णत्वविधायकं विधिसूत्रम्—

**सूत्रम्—** पूर्वपदात् सञ्ज्ञायाम् अगः (८,४.३)

**अर्थः—** पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् सञ्ज्ञायाम्, न तु गकारव्यवधाने।

○ शूर्पणखा। गौरमुखा।

○ सञ्ज्ञायां किम् ? ताम्रमुखी कन्या॥

शूर्पाणीव कररुहाः यस्याः सा
शूर्प जस् + नख जस्
शूर्पनख
शूर्पणख+ टाप्
शूर्पणखा (केवलयौगिकत्वे तु— शूर्पनखी)

श्वेतं मुखं यस्याः सा
गौरमुख+ टाप्
गौरमुखा (केवलयौगिकत्वे तु— गौरमुखी)

ताम्रम् इव मुखं यस्याः सा
ताम्रमुख+ ङीष्
ताम्रमुखी

# जातिवाचकेभ्यः'ङीष्'प्रत्ययविधिः



{मूलपाठः}

❖ 'ङीष्'प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्**— जातेरस्त्रीविषयादयोपधात् (४,१.६३)

**अर्थः**— जातिवाचि यन्न च स्त्रियां नियतम् अयोपधं ततः स्त्रियां ङीष् स्यात्।

१.तटी। (आकृतिग्रहणा जातिः,{तर्कशास्त्रप्रसिद्धा जातिरियम्})

२.वृषली। (लिङ्गानां च न सर्वभाक्।{सकृदाख्यातनिर्ग्राह्या, स्मृतिप्रसिद्धा जातिरियम्})

३. (औपगवी।) (गोत्रञ्च,{अतिदिष्टजातिः})

४. कठी, बह्वृची। (चरणैः सह॥, {अतिदिष्टजातिः})




तटत्वजातिः (स्त्रीत्वे)— तटी
वृषलत्वजातेः स्त्री— वृषली
उपगोरपत्यं स्त्री— औपगवी
कठेन प्रोक्तमधीते(स्त्री)— कठी
बहवः ऋचो (अध्येतव्याः)यस्याः सा— बह्वृची

१. आकृति से पहचाने जाने वाली जाति होती है। अनुगतेन अवयवसंस्थानेन ज्ञातुं शक्या। यथा कुक्कुटी, सूकरी ,शुकी ,मृगी इत्यादयः।

२. एकस्यां व्यक्तौ सकृत्= एकवारम् आख्यातेन= उपदेशेन (व्यक्त्यन्तरे उपदेशं विनापि) निर्ग्राह्या= सुग्राह्या। एकस्यां व्यक्तौ वृषलत्वे ब्राह्मणत्वे वोपदिष्टे तदपत्य-सहोदरादिषु तदुपदेशं विनापि सुग्रहत्वात्। यथा— वृषली, ब्राह्मणी इत्यादयः। किन्तु एतादृशः शब्दः त्रिलिङ्गी न स्यात्।

३. ४. गोत्र= अपत्यप्रत्ययान्त प्रातिपदिक यथा औपगवी, नाडायनी तथा चरणवाची= वेदशाखाध्येतृवाचक प्रातिपदिक भी जाति होते हैं।

# जातिवाचकेभ्यः‘ङीष्’प्रत्ययविधिः

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

- जातेः किम् ? मुण्डा।
- अस्त्रीविषयात्किम् ? बलाका।
- अयोपधात्किम् ? क्षत्रिया।

**वार्तिकम्—** योपधप्रतिषेधे[१] हय-गवय-मुकय-मनुष्य-मत्स्यानामप्रतिषेधः।

**अर्थः—** हय-गवय-मुकय-मनुष्य-मत्स्य एतेषां योपधत्वेऽपि ङीष् वाच्यः।

- हयी। गवयी। मुकयी।
- हलस्तद्धितस्येति यलोपः— मनुषी।

**वार्तिकम्—** मत्स्यस्य ङ्याम्।

**अर्थः—**मत्स्यावयवस्य यलोपः स्यात् ‘ङी’परत एव।

- मत्सी॥

मनुष्यत्वजातेः स्त्री
मनुष्य+ ङीष्
मनुष्य्+ ई
मनुष्+ ई
मनुषी

मत्स्यत्वजातेः स्त्री
मत्स्य+ ङीष्
मत्स्य्+ ई
मत्स् + ई
मत्सी

१. चेन्नै संस्करणे ‘योपधप्रतिषेधे’ इति पाठः वार्तिके नास्ति। तस्य पाठः ‘हयी’ इत्युदाहरणात् पूर्व वर्तते।

लघुसिद्धान्तकौमुद्याम्
स्त्रीप्रत्ययाः

{मूलपाठः}

# इकारान्त् मनुष्यजातिवाचिनः 'ङीष्'विधिः
# उकारान्त् मनुष्यजातिवाचिनः 'ऊङ्'विधिः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ 'ङीष्'प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— इतो मनुष्यजातेः (४,१.६५)**

**अर्थः—** (इकारान्तात् प्रातिपदिकात् मनुष्यजातिवाचिनः स्त्रियां ) 'ङीष्' स्यात्।

- दाक्षी॥

❖ 'ऊङ्'प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— ऊङुतः (४,१.६६)**

**अर्थः—** उदन्ताद् अयोपधाद् मनुष्यजातिवाचिनः स्त्रियाम् 'ऊङ्' स्यात्।

- कुरूः।
- अयोपधात्किम् ? अध्वर्युर्ब्राह्मणी॥

दक्षस्य अपत्यं (मनुष्यजातेः) स्त्री
दक्ष ङस् + इञ् (अत इञ्)
दाक्षि
दाक्षि+ ङीष्
दाक्षी (प्लाक्षी, अवन्ती, कुन्ती)

कुरोः अपत्यं (मनुष्यजातेः) स्त्री
कुरु ङस् + ण्य (कुरु-नादिभ्यो ण्यः)
(स्त्रियाम् अवन्ति-कुन्तिकुरुभ्यश्च— ण्यप्रत्ययस्य लुक्।)
कुरु
कुरु+ ऊङ्
कुरू+ सुँ= कुरूः

# पङ्गुशब्दात् श्वशुरशब्दाच्च 'ऊङ्'प्रत्ययविधिः



{मूलपाठः}

❖ 'ऊङ्'प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— पङ्गोश्च (४,१.६८)**

अर्थः— 'पङ्गु'प्रातिपदिकात् स्त्रियां 'ऊङ्'प्रत्ययः स्यात्।

○ पङ्गूः।

❖ 'ऊङ्'प्रत्ययविधायकं काशिकोक्तं वार्तिकम्—

**श्वशुरस्योकाराकारलोपश्च।**

अर्थः— 'श्वशुर'प्रातिपदिकात् पुंयोगे स्त्रियाम् 'ऊङ्' स्यात्। तथा 'श्वशुर' इत्यस्य उकारस्य अन्त्य-अकारस्य च लोपः स्यात्।

○ श्वश्रूः॥

पङ्गुत्वगुणविशिष्टा स्त्री
पङ्गु+ ऊङ्
पङ्गू
पङ्गू + सुँ
पङ्गूः

श्वशुरस्य स्त्री
श्वशुर+ ऊङ् (पुंयोगादाख्यायाम् इति प्राप्ते
श्वश् र्+ ऊ
श्वश्रू+ सुँ= श्वश्रूः

# ‘ऊङ्’प्रत्ययविधिः



{मूलपाठः}

❖ ‘ऊङ्’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** ऊरूत्तरपदाद् औपम्ये (४,१.६९)

**अर्थः—** उपमानवाची पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्।

- करभोरूः॥

करभौ इव ऊरू यस्याः सा

करभ औ + ऊरु औ (अनेकमन्यपदार्थे)

करभोरु+ ऊङ्

करभोरू + सुँ

करभोरूः

मणिबन्धाद् आकनिष्ठं करस्य करभो बहिः।

❖ ‘ऊङ्’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** संहित-शफ-लक्षण-वामादेश्च (४,१.७०)

**अर्थः—** ‘संहित-शफ-लक्षण-वाम’ इत्येवमादेः प्रातिपदिकाद् ऊरूत्तरपदात् स्त्रियाम् ऊङ् स्यात्।

- अनौपम्यार्थं सूत्रम्।
- संहितोरूः। शफोरूः। लक्षणोरूः। वामोरूः॥

- संहितौ= संश्लिष्टौ ऊरू यस्याः सा
- शफौ= खुरौ ऊरू यस्याः सा

(अत्र ऊरुषु खुरत्वारोपः)

- लक्षणौ= शुभलक्षणवन्तौ ऊरू यस्याः सा

(प्रशस्तं लक्षणम् अस्ति अस्येति लक्षणः ‘अर्शआदिभ्योऽच्)

- वामौ= अतिसुन्दरौ ऊरू यस्याः सा

# जातिवाचिनो 'ङीन्'प्रत्ययविधिः



❖ 'ङीन्'प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

सूत्रम्— शार्ङ्गरवाद्यञो ङीन् (४,१.७३)

अर्थः— शार्ङ्गरवादेर् अञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्।

- शार्ङ्गरवी।
- बैदी। (बिदस्य गोत्रापत्यं स्त्री 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्')
- ब्राह्मणी। (ब्रह्मणोऽपत्यं ब्राह्मणः (अण्) तस्य जातेः स्त्री)

गणसूत्रम्— नृ-नरयोर्वृद्धिश्च।

अर्थः— 'नृ-नर'जातिवाचकेभ्यः प्रातिपदिकेभ्यः स्त्रीत्वे ङीन् स्याद् वृद्धिश्च।

- नारी॥

शृङ्गोरपत्यं स्त्री (गोत्रञ्च इत्यनेन जातिलक्षणः)
शृङ्गरु ङस्+ अण् (तस्यापत्यम्)
शार्ङ्गरो + अ
शार्ङ्गरव+ ङीन्
शार्ङ्गरव्+ ई
शार्ङ्गरवी + सुँ = शार्ङ्गरवी

अत्र 'टिड्ढाणञ्...' इति ङीपं बाधित्वा परत्वाज्जातेरस्त्री-विषयादिति प्राप्ते अनेन ङीन्।

नृत्वजातेः स्त्री
नृ+ ङीन्
नार्+ ई
नारी + सुँ = नारी

नरत्वजातेः स्त्री
नर+ ङीन्
नार्+ ई
नारी + सुँ = नारी

शार्ङ्गरवादिगण— शार्ङ्गरव। कापटव। गौग्गुलव। ब्राह्मण। गौतम। कामण्डलेय। ब्राह्मकृतेय। आनिचेय। आनिधेय। आशोकेय। वात्स्यायन। मौञ्जायन। कैकसेय। काव्य। शैव्य। एहि। पर्येहि। आश्मरथ्य। औदपान। अराल। चण्डाल। वतण्ड। गणसूत्रम्— भोगवद्गौरिमतोः सञ्ज्ञायाम्। भोगवत्, गौरिमत्। गणसूत्रम्— नृनरयोर्वृद्धिश्च। नृ। नर। (पुत्र।)

# युवन्प्रातिपदिकात् 'ति'प्रत्ययविधिः



❖ 'ति'प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— यूनस्तिः (४,१.७७)**

अर्थः— युवञ्छब्दात् स्त्रियां 'तिः' प्रत्ययः स्यात्।

○ युवतिः॥

॥ इति स्त्रीप्रत्ययप्रकरणम्॥

युवत्ववयो विशिष्टा स्त्री

युवन्+ ति (स्वादिष्वसर्वनामस्थाने)

युव+ ति (नलोपः प्रातिपदिकान्तस्य)

युवति + सुँ (लिङ्गविशिष्टपरिभाषया)

युवतिः

'युवती' इति दीर्घ-ईकारान्तोऽपि साधु।

यौति= मिश्रीकरोति आत्मानं पत्येति

यु+ शतृ

युवत्+ ङीप् (उगितश्च)

युवती+ सुँ= युवती

# अन्त्यमङ्गलम्



शास्त्रान्तरे(ऽ) प्रविष्टानां बालानां चोपकारिका।
कृता वरदराजेन लघुसिद्धान्तकौमुदी॥ {मूलपाठः}

**अन्वयपूर्विकाव्याख्या—** शास्त्रान्तरे= तर्कादिशास्त्रे, काव्यकोषादौ वा प्रविष्टानां= अन्तर्भूतानां अप्रविष्टानां= शास्त्रान्तरज्ञानविकलानां बालानां चोपकारिका (इयम्) लघुसिद्धान्तकौमुदी वरदराजेन कृता ॥

- (अन्यत् शास्त्रं शास्त्रान्तरम्, मयूरव्यंसकादित्वात् समासः) तस्मिन् = शास्त्रान्तरे।
- अधीतकाव्यकोषादिग्रन्था अनधीतव्याकरणशास्त्राः बालाः।

# स्त्रीप्रत्ययस्य परीक्षणम्

**०१. 'उगितश्च' इति सूत्रेण कः प्रत्ययो भवति ?**

**क. ङीप्**

ख. ङीष्

ग. टाप्

घ. डाप्

**०२. 'तरुणी' इत्यत्र कः प्रत्ययः?**

**क. ङीप्**

ख. ङीष्

ग. ङीन्

घ. ति

**०३. 'ऐन्द्री' इत्यत्र ङीप् प्रत्ययः केन सूत्रेण ?**

क. उगितश्च

**ख. टिड्ढाणञ्.....**

ग. ऋन्नेभ्यो ङीप्

घ. जातेरस्त्रीविषयादयोपधात्

**०४. 'गार्गी' इति कस्योदाहरणम् ?**

क. उगितश्च

ख. टिड्ढाणञ्.....

**ग. यञश्च**

घ. ऋन्नेभ्यो ङीप्

**०५. 'नर्तकी' इत्यत्र कः प्रत्ययः ?**

क. ङीप्

**ख. ङीष्**

ग. ङीन्

घ. ति

**०६. 'वयसि प्रथमे' इति सूत्रेण एषु कुत्र 'ङीप्' ?**

क. नारी

ख. गौरी

**ग. कुमारी**

घ. तरुणी

**०७. 'त्रिलोकी' इत्यत्र कः प्रत्ययः ?**

**क. ङीप्**

ख. ङीष्

ग. ङीन्

घ. ति

**०८. वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात् प्रातिपदिकाद्वा..........।**

**क. ङीप्**

ख. ङीष्

ग. ङीन्

घ. ति

**०९. उदन्ताद् गुणवाचिनो वा ........ स्यात्।**

क. ङीप्

**ख. ङीष्**

ग. ङीन्

घ. ति

**१०. गोपस्य स्त्री=..........?**

क. गोपा

ख. गोपालिका

ग. गोपि

**घ. गोपी**

**११. प्रत्ययस्थात् कात् पूर्वस्याकारस्य ......... स्यात्।**

क. ईकारः

ख. इकारः

ग. उकारः

घ. ऊकारः

**१२. सूर्यस्य स्त्री मानुषी ?**

क. सूर्या

ख. सूर्यी

**ग. सूरी**

घ. शूरी

**१३. 'सूर्यागस्त्ययोश्छे च ङ्यां च' इति वार्तिकेन किं भवति ?**

क. ङीप्

**ख. यलोपः**

ग. ङीष्

घ. अकारलोपः

**१४. रुद्रस्य स्त्री=..........?**

क. रुद्री

ख. रुद्रा

**ग. रुद्राणी**

घ. भवानी

**१५. दुष्टो यवो=......?**

**क. यवानी**

ख. यवनानी

ग. यवनी

घ. दुष्टानी

**१६. आचार्यस्य स्त्री= .........।**

क. आचार्या

ख. आचार्यी

**ग. आचार्यानी**

घ. उपाध्यायी

**१७. 'धनक्रीता' इत्यत्र कः प्रत्ययः ?**

**क. टाप्**

ख. चाप्

ग. डाप्

घ. ऊङ्

**१८. 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति सूत्रेण ङीषभावे कः स्त्रीप्रत्ययः?**

क. चाप्

ख. डाप्

ग. ङीप्

**घ. टाप्**

**१९. 'सुकेशी सुकेशा वा रथ्या' इत्यत्र केन लक्षणेन स्वाङ्गं सिद्ध्यति ?**

क. अद्रवं मूर्तिमत् स्वाङ्गम्।

ख. प्राणिस्थमविकारजम्।

**ग. अतत्स्थं तत्र दृष्टं च।**

घ. तेन चेत्तत्तथायुतम्।

**२०. 'सुगुल्फा' इत्यत्र 'स्वाङ्गाच्चोपसर्जनाद-संयोगोपधात्' इति सूत्रेण ङीष् कथं न ?**

**क. संयोगोपधत्वात्**

ख. स्वाङ्गाभावात्

ग. उपसर्जनत्वात्

घ. अनुपसर्जनत्वात्

**२१. 'न क्रोडादिबह्वचः' इति कस्य सूत्रस्य निषेधं करोति?**

क. नखमुखात् सञ्ज्ञायाम्

**ख. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्**

ग. क्रीतात्करणपूर्वात्

घ. इन्द्र-वरुण..........

**२२. पूर्वपदात् सञ्ज्ञायामगः इति सूत्रेण भवति –**

**क. णत्वम्**

ख. ङीष्

ग. ङीप्

घ. ङीप् निषेधः

२३. 'लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या' इति लक्षणान्वितस्य जातेः उदाहरणं किम्?

क. कठी।

ख. बह्वृची।

ग. तटी।

**घ. वृषली।**

**२४. ‘श्वश्रूः’ इत्यत्र प्रातिपदिकं किम् ?**

क. स्वसृ

ख. श्वसु

**ग. श्वशुर**

घ. श्वसुर

**२५. एतेषु अशुद्धं चिनुत—**

क. नारी

ख. युवती

ग. युवतिः

घ. शफोरुः